## गणेश वंदना

हे गणेश! तव पावनचरणौ

सर्वे वयं सदा प्रणमामः।

देहि देव! सद्विद्यां नस्त्वं

दूरी-कुरु मनसः अज्ञानम्।

साञ्जलि -वयं नमस्कुर्मः त्वां,

कृत्वा तव पदपद्म ध्यानम्।

रक्ष सर्वदा हेरम्ब ! त्वं

देव ! त्वां शरणं गच्छामः।

हे गणेश ! तव पावनचरणौ,

सर्वे वयं सदा प्रणमामः

**शब्दार्थाः**

पावन-पवित्र, नस्त्वम् (नः$त्वम्) हमें तुम, मनसः-मन का, साञ्जलि -हाथ जोड़कर,

***पदपद्म ध्यानम्-चरण कमलों का ध्यान, हेरम्ब-हे गणेश!, प्रणमामः- प्रणाम करते हैं।***

***शिक्षण-संकेतः***

***<u>- शिक्षकः वन्दनायाः सस्वरगायनं कारयेत्।</u>***

## प्रथमःपाठः

# वन्दे सदा स्वदेशम्।

वन्दे सदा स्वदेशम्।

एतादृशं स्वदेशम

गंगा पुनाति भालम्।

रेवा कटिप्रदेशम्।

वन्दे सदा स्वदेशम्।

एतादृशं स्वदेशम्।

वन्दे ध्वजं त्रिवर्णम्।

वन्दे स्वतंत्रदेशम्।

वन्दे सदा स्वदेशम्।

एतादृशं स्वदेशम्।

- प्रो0 'अभिराज' राजेन्द्र मिश्र

## शिक्षण-संकेतः

*- शिक्षकः गीतस्य सस्वरगायनं कारयेत्।*

**शब्दार्थाः**

***एतादृशम् - ऐसे, पुनाति - पवित्र करती है, रेवा - नर्मदा , त्रिवर्णम् - तिरंगा, ध्वजम् - झण्डे को, भालम् - मस्तक, कटि - कमर***

# द्वितीयः पाठ

## वाक्यबोधः (प्रथमः)

*अयं कः अस्ति ?*

*अयम् अश्वः अस्ति।*

*अश्वः किं करोति ?*

*अश्वः धावति।*

*इमौ कौ स्तः ?*

*इमौ अश्वौ स्तः।*

*अश्वौ किं कुरुतः ?*

*अश्वौ धावतः।*

*इमे के सन्ति ?*

*इमे अश्वाः सन्ति।*

*अश्वाः किं कुर्वन्ति ?*

*अश्वाः धावन्ति।*

*अयं कः अस्ति ?*

*अयं कुक्कुरः अस्ति।*

*कुक्कुरः किं करोति* ?

*कुक्कुरः बुक्कति।*

*इमौ कौ स्तः* ?

*इमौ कुक्कुरौ स्तः।*

*कुक्कुरौ किं कुरुतः* ?

*कुक्कुरौ बुक्कतः।*

*इमे के सन्ति* ?

*इमे कुक्कुराः सन्ति।*

*कुक्कुराः किं कुर्वन्ति* ?

*कुक्कुराः बुक्कन्ति।*

*एषः कः अस्ति* ?

*एषः साधुः अस्ति*

*साधुःकिंकरोति* ?

*साधुः गच्छति।*

*एतौ कौ स्तः* ?

*एतौ साधू स्तः।*

*साधू किं कुरुतः* ?

*साधू गच्छतः*।

*एते के सन्ति* ?

*एते साधवः सन्ति*।

*साधवः किं कुर्वन्ति* ?

*साधवः गच्छन्ति*।

*एषः कः अस्ति* ?

*एषः पिता अस्ति।*

*पिता किं करोति* ?

*पिता लालयति।*

*एतौ कौ स्तः* ?

*एतौ पितरौ स्तः।*

*पितरौ किं कुरुतः* ?

*पितरौ लालयतः।*

*एते के सन्ति* ?

*एतेपितरःसन्ति।*

*पितरः किं कुर्वन्ति ?*

*पितरः लालयन्ति*

**शब्दार्थाः -**

*अयम् - यह, इमौ - ये दोनांे, अश्वः - घोड़ा, धावन्ति - दौड़ते हैं, कुक्कुरः - कुत्ता , बुक्कति- भौंकता है, साधुः - साधू, लालयति-दुलार करता है।*

**अभ्यासाः**

**1. मौखिकम् अभ्यासं कुरुत अभ्यासपुस्तिकायां च लिखत-**

*अयम् इमौ इमे*

*एषः एतौ एते*

*सः तौ ते*

**2. एकपदेन उत्तरत**

*यथा- अश्वः किं करोति ? धावति*

(क) *साधुः किं करोति ?* ............।

(ख) *के लालयन्ति ?* .............।

(ग) *कौ बुक्कतः ?* .............।

**3. उचित क्रियापदैः वाक्यानि पूरयत-**

***लालयन्ति, धावतः, गच्छन्ति, बुक्कतः***

(*क*) ***कुक्कुरौ*** ............................। (*ख*) ***अश्वौ*** ............................।

(*ग*) ***पितरः*** ...............................। (*घ*) ***साधवः*** ............................।

**4. *उदाहरणानुसारं रूपाणि पूरयत-***

***यथा- बालकः बालकौ बालकाः***

.............. ***वानरौ*** ..............

***कुक्कुरः*** .............. ..............

**5. *चित्रं दृष्ट्वा उत्तरं लिखत-***

***यथा- वानरः किं करोति*** ? ***भ्रातरौ किं कुरुतः*** ? ***मण्डूकाः किं कुर्वन्ति*** ?

***वानरः खादति***। .............................। .............................।

***बालकः बालकौ बालकाः***

***साधुः साधू साधवः***

***पिता पितरौ पितरः***

***साधुः साधू साधवः***

***गुरुः*** ......... ........

......... .......... ***भानवः***

***शिक्षण-सकेतः*** -

# तृतीयः पाठः

## वाक्यबोधः (द्वितीयः)

एतत् किम् अस्ति ?

एतत् गृहम् अस्ति।

तत् किम् अस्ति ?

तत् कारयानम् अस्ति।

एते के स्तः ?

*एते छत्रे स्तः*

*ते के स्तः* ?

*ते व्यजने स्तः*।

*तानि कानि सन्ति* ?

*तानि कदलीफलानि सन्ति*।

*एतानि कानि सन्ति* ?

*एतानि पुस्तकानि सन्ति।*

*एतत् किम्* ?

*पत्रम*

*नाणकम्*

*युतकम्*

एते के?

पत्रे



नाणके

युतके

एतानि कानि ?

पत्राणि

नाणकानि

युतका

शब्दार्थः;

एतत् - यह, तत् - वह, छत्रे - दो छाते, व्यजने - दो पंखे, कदलीफलानि - केले, नाणकम् - सिक्का, , युतकम्- कमीज़

अभ्यासाः

1. उच्चारणं कुरुत अभ्यासपुस्तिकायां च लिखत -

एतत् एते एतानि गृहम् गृहे गृहाणि

तत् ते तानि दाडिमम् दाडिमे दाडिमानि

2. "म्" योजयित्वा शब्दनिर्माणं कुरुत -

यथा- पत्र पत्रम् द्वार .................. मुख .................

मित्र .................. वन ................... आम्र ...............

3. *चित्रैः सह शब्दान् मेलयत-*

*क्रीडनकम्*

*क{तम्*

*दीपकम्*

*विमानम्*

4. *अधोलिखित-शब्दान् एकैकशः उचित-गृहे स्थापयन्तु-*

*एतत/ तत* *एते /ते* *एतानि /तानि*

*व्यजनम् ,व्यजनानि, गृहम्*

*फलानि, फले, व्यजने*

*गृहाणि ,नाणकम् ,गृहे*

*नाणकानि ,फलम्, नाणके*

**शिक्षण--सकेतः**

- शिक्षकः नपुंसकलिङ्ग शब्दानाम् अभ्यासं कारयेत्।

## चतुर्थः पाठः

# वाक्यबोधः (तृतीयः)

*एषा का अस्ति ?*

*एषा छात्रा अस्ति।*

*एषा किं करोति ?*

*एषा पठति।*

*सा का अस्ति ?*

*सा गायिका अस्ति।*

*सा किं करोति* ?

*सा गायति।*

*एते के स्तः* ?

*एते बालिके स्तः।*

*एते किं कुरुतः* ?

*एते क्रीडतः।*

*ते के स्तः* ?

*ते अजे स्तः।*

*ते किं कुरुतः ?*

*ते चरतः।*

*एताः काः सन्ति ?*

*एताः गायिकाः सन्ति।*

*एताः किं कुर्वन्ति ?*

*एताः गायन्ति।*

*ताः काः सन्ति ?*

*ताः बालिकाः सन्ति।*

*ताः किं कुर्वन्ति* ?

*ताः पिबन्ति*।

*एषा का* ?

*सारिका*

*एते के* ?

*सारिके*

*एताः काः*?

*सारिकाः*

*एषा का* ?

*लेखनी*

*एते के* ?

लेखन्यौ

एताः काः?

लेखन्यः

**शब्दार्थाः**

नृत्यतः- दो नाचती हैं, एताः-ये सब, सारिका-मैना, अजा - बकरी

**अभ्यासाः**

1. मौखिकम् अभ्यासं कुरुत अभ्यासपुस्तिकायां च लिखत -

एषा एते एताः

सा ते ताः

गायिका गायिके गायिकाः

मूषिका मूषिके मूषिकाः

2. वाक्यानि पूरयत-

(क) ................ छात्रा अस्ति। (ख) .............. गायिकाः सन्ति।

(ग) ............. बालिकाः सन्ति। (घ) ......................... अजे चरतः।

3. चित्राणि दृष्टवा अष्ट स्त्रीलिप्र-शब्दान् लिखत -

--- --- --- --- --- --- --- ---

**4. *वाक्यानि लिखत -***

***यथा- बालिका पश्यति। बालिके पश्यतः। बालिकाः पश्यन्ति।***

(*क*) ***वृद्धा*** ***अर्चति।*** ............................................... .....................................................।

(***ख***) ***कलिका*** ***विकसति।*** ..................................... .....................................................।

(***ग***) ***लेखिका*** ***लिखति।*** ....................................... .....................................................।

(***घ***) ***छात्रा*** ***गायति।*** ..................................... .....................................................।

(ड.) ***महिला*** ***नृत्यति।*** ...................................... .....................................................।

***शिक्षण-सकेतः - शिक्षकः स्त्रीलिंगशब्दाः अभ्यासं कारयेत्।***

# पञ्चम पाठः

## वाक्यबोधः (चतुर्थः)

त्वं कः ? 

अहं दिनेशः।

त्वं किं करोषि ?

अहं गीतं गायामि।

युवां कौ ? 

आवां ऋषभः, जयः।

युवां किं कुरुथः ?

आवां फलं खादावः।

*यूयंके* ?

*वयं दीपेशः, देवेशः, लोकेशः।*

*यूयं किं कुरुथ* ?

*वयं गुरुं नमामः।*

*त्वं कः* ?

*अहं उजमा।*

*त्वं किं करोषि* ?

*अहं संस्कृतं पठामि।*

*युवां के* ?

*आवां शिखा, विभा।*

*युवां किं कुरुथः?*

*आवां चित्रं रचयावः।*

*यूयं काः ?*

*वयं श्रेया, नेहाः, मोनिकाः।*

*यूयं किं कुरुथ ?*

*वयं कन्दुकं क्रीडामः।*

**शब्दार्थाः-**

*अहम् - मैं, आवाम् - हम दोनों, वयम् - हम सब, त्वम् - तुम, युवाम् - तुम दोनों, यूयम्-तुम सब, गायामि-गाता हूँ, क्रीडामः-हम सब खेलती हैं, नमामः-हम सब प्रणाम करते हैं। रचयावः- हम दोनों बनाते हैं,कन्दुकम् - गेंद ।*

**अभ्यासाः**

1. *मौखिकम् अभ्यासं कुरुत अभ्यासपुस्तिकायां च लिखत -*

*अहम् आवाम् वयम् गायामि गायावः गायामः*

*त्वम् युवाम् यूयम् करोषि कुरुथः कुरुथ*

2. *शब्दानुसारं क्रियापदानि चित्वा लिखत -*

(*पठामि*, *क्रीडसि*, *खादामः नृत्यसि*, *पचथः*, *गच्छामि*, *गच्छथ*, *हसामः क्रीडावः*, *कुरुथ*, *पिबावः*,*क्रीडथः*)

*यथा- अहं आवाम् वयम् त्वम् युवाम्, यूयम्*

*पठामि* ........... ........... ........... ........... ...........

........... ........... ........... ........... ........... ...........

3. *वाक्यानि पूरयत -*

*यथा- अहं पाठं पठामि*। (*पठामि*/*क्रीडामः*)

(*ख*) *त्वं किं* .......................................। (*करोषि*/*करोमि*)

(ग) *अहं बालिका* ..................................। (*असि*/*अस्मि*)

(घ) *आवां चित्रं* ....................................। (*रचयावः*/*लिखामः*)

(ड.) *वयं कन्दुकेन* ................................। (*क्रीडामः*/*नयावः*)

4. *शब्दरूपाणि पूरयत-*

(*क*) *अहम्* ................... *वयम्* (*ख*) ............... *युवाम् यूयम्*

(ग) *अस्ति* ....................*सन्ति* (घ) *असि* ................ *स्थ*

5. *मेलयत -*

*अहम् किं करोषि* ?

*त्वम् दुग्धं पिबामि*।

***वयम् चित्रं पश्यथ।***

***यूयम् संस्कृतं लिखामः।***

***<u>शिक्षण-सकेतः -</u>***

***<u>शिक्षकः कक्षायाम् 'अस्मद्' 'युष्मद्' शब्दरूपाणां प्रयोगं कारयेत्।</u>***

## षष्ठः पाठः

# अव्यय - शब्दाः

रमा - भो विजय! सुरेशः कुत्र अस्ति ?

विजयः - सम्प्रति सः विद्यालये अस्ति।

रमा - सः कदा विद्यालयं गच्छति ?

विजयः - सः प्रातः काले विद्यालयं गच्छति।

रमा - किं सः ध्यानेन पठति ?

विजयः - आम्। तत्र सः सदा ध्यानेन पठति।

*रमा - तत्र सः संस्कृतम् अपि पठति ?*

*विजयः - आम्। सः संस्कृतम् अपि पठति। सः संस्कृतकक्षायां मित्रैः सह संस्कृतम् एव वदति।*

*रमा - सः कति वादने गृहम् आगच्छति ?*

*विजयः - सः सायं-काले प॰चवादने गृहम् आगच्छति।*

***शब्दार्थाः***

*कुत्र - कहाँ, सम्प्रति - इस समय, कदा - कब, प्रातः - सुबह, किम् - क्या,*

*सदा - हमेशा, अपि - भी, सह - साथ ।*

***अभ्यासाः***

**1. *उचित-अव्यय-पदानि चित्वा वाक्यानि पूरयत -***

(*सदा, सम्प्रति, अपि, कति*)

(*क*) *सः* .................... *वादने गृहम् आगच्छति* ? (*ख*) *सः* .................. *ध्यानेन पठति।*

(*ग*) *सः संस्कृतम्* .................... *पठति।* (*घ*) ................ *सः विद्यालये अस्ति।*

**2. *यथोचितं मेलयत-***

*एकदा इस समय*

*सदा एकबार*

*कदा कहाँ*

सम्प्रति हमेशा

कुत्र कब

3. प्रश्नानाम् उत्तराणि लिखत-

(क) प्रातःकाले सुरेशः कुत्र गच्छति ?

(ख) तत्र सः किं पठति ?

(ग) सुरेशः कति वादने गृहम् आगच्छति ?

(घ) सः संस्कृतकक्षायां मित्रैः सह किं वदति ?

4. उदाहरणानुसारं अव्यय-पदानि चित्वा लिखत-

| त | अ | स | र्व | त्र |
|---|---|---|---|---|
| था | धु | दा | स | ह |
| पि | ना | म | न्द | म् |
| ए | क | दा | त | त्र |
| व | दा | अ | न्य | त्र |

यथा- तथापि .............................. ..............................

शिक्षण-सकेतः-

शिक्षकः अव्यय-पदानाम् अभ्यासं कारयेत् ।

सप्तमः पाठः

# एहि एहि वीर रे ....

एहि एहि वीर रे, वीरतां विधेहि रे

भारतस्य रक्षणाय, जीवनं प्रदेहि रे।

त्वं हि मार्गदर्शकः, त्वं हि देशरक्षकः

त्वं हि शत्रुनाशकः, देश-प्रेम-वर्धकः।

साहसी सदा भवेः, वीरतां सदा भजेः

भारतीय-संस्कृतिं, मानसे सदा धरेः।

*पदं-पदं मिलच्चलेत्, सोत्साहं मनो भवेत्*

*भारतस्य गौरवाय, सर्वदा रणे जयेत्।*

*एहि एहि वीर रे ...*

*- लक्ष्मीकान्त जाम्बोरकर:*

***शिक्षण-सकेतः -***

*शिक्षकः सचलदूरभाषमाध्यमेन(मोबाइल) गीतं श्रावयेत्।*

**शब्दार्थाः**

*एहि-आओ, भारतस्य-भारत की, रक्षणाय-रक्षा के लिए, प्रदेहि-दो , भवेः-बनें , मानसे-मन में, सदा धरेः-धारण करें।*

अष्टमः पाठः

# यातायात-संकेताः

एकदा निखिलः स्व पितामहेन सह नगरं गच्छति। तत्र चतुष्पथे मार्गात् पारं गमने भयं करोति।

पितामहः - पुरतः यातायातस्य सकेतं पश्य। संकेते त्रिवर्णाः सन्ति।

निखिलः - किम् इमे सकेताः प्रकाशाय सन्ति ?

पितामहः - न! इमे यातायातस्य संकेताः सन्ति। रक्तवर्णस्य संकेतस्य अर्थः अस्ति-तिष्ठ। पीतवर्णस्य संकेतस्य अर्थः अस्ति-प्रतीच्छ अथवा सावधानः। हरितवर्णस्य संकेतस्य अर्थः अस्ति-अग्रेसर अथवा चल।

निखिलः - पितामह! अयं श्वेतश्याम वर्णस्य पङ्क्तिः किमर्थम् अस्ति ?

पितामहः - अयं पदातिनां पारं गमन मार्गः (जेब्रा क्रॉसिंग) अस्ति। अनेन जनाः पदतिः

पारं गच्छति।

निखिलः - अहो इयं व्यवस्था अत्यन्तं सरला अस्ति। क्षणान्ते रक्तवर्णस्य संकेतः भवति। सर्वाणि वाहनानि स्व-स्व स्थाने तिष्ठन्ति। तदनन्तरं निखिलः पितामहेन सह मार्गं पारं करोति।

**शब्दार्थाः**

चतुष्पथे - चौराहे पर, पश्य - देखो, त्रिवर्णाः - तीन रंग के, रक्तवर्णस्य - लालरंग के, पीतवर्णस्य - पीले रंग के, तिष्ठ - रुको, प्रतीच्छ - प्रतीक्षा करो, हरितवर्णस्य - हरे रंग के, श्वेतश्याम- वर्णस्य पङ्क्तिः-जेब्रा क्रॉसिंग।

**अभ्यासाः**

1. प्रश्नानाम् उत्तराणि लिखत-

यथा- निखिलः स्वपितामहेन सह कुत्र गच्छति ? नगरम् ।

(क) संकेते कति वर्णाः सन्ति ? .................।

(ख) रक्तवर्ण-संकेतस्य कः अर्थः अस्ति ? .................।

(ग) हरितवर्ण-संकेतस्य कः अर्थः अस्ति ? .................।

2. अधोलिखितं वाक्यं कः कथयति इति चित्वा लिखत-(पितामहः/निखिलः)-

यथा- किम् इमे संकेताः प्रकाशाय सन्ति ? निखिलः।

(क) पीतवर्ण-संकेतस्य अर्थः अस्ति-प्रतीच्छ अथवा सावधानः।............।

(ख) अयं पदातिनां पारं गमन मार्गः अस्ति। ...........।

(ग) अहो! यातायातस्य इयं व्यवस्था अत्यन्तं सरला अस्ति। ............।

3. *सत्य कथनस्य समक्षम् 'आम्' असत्य-कथनस्य च समक्षं 'न' इति लिखत-*

*यथा- निखिलः स्व मित्रेण सह नगरं गच्छति।* ( *न* )

(*क*) *संकेते पञ्च वर्णाः सन्ति।* ( )

(*ख*) *रक्तवर्ण-संकेतस्य अर्थः अस्ति-तिष्ठ।* ( )

(ग) *हरितवर्ण-संकेतस्य अर्थः अस्ति-गच्छ।* ( )

***शिक्षण-संकेतः***

*शिक्षकः मार्गसुरक्षा व यातायातनियम-विषये छात्रैः सह चर्चां कुर्यात्।*

**नवमः**

# लघुपरिवारः

एषः मम परिवारः

एषः लघुपरिवारः।

परिजन-पालक-जनकः

न हि दीनः नहि धनिकः।

अतिसरला मम जननी

इयं सुशीला भगिनी।

अहमस्याः सुबन्धुः

एषः मम......

भ्रातृभगिन्योः भेदः

*न हि कश्चिद्, न हि खेदः।*

*आदर्शः परिवारः*

*मोदन्ते द्रष्टारः। एषः मम......*

## *शब्दार्थाः*

*परिजन - परिवार के लोग , जनकः - पिता, दीनः - गरीब, सुबन्धु - अच्छा भाई,*

*भ्रातृभगिन्योः - भाई-बहन में, मोदन्ते - प्रसन्न होते हैं। द्रष्टारः - देखने वाले।*

## *-शिक्षण-सकेतः-*

*शिक्षकः कवितायाः सस्वरगायनं कारयेत्।*

## दशमः

# जन्मदिनम्

*अद्य सुरेखायाः जन्मदिनम् अस्ति। सुरेखा प्रातःशीघ्रम् उŸि ष्ठति। स्नानं करोति। नूतनानि वस्त्राणि ध्ारति। मातापितरौ नमति। गृहजनाः गृहम् अलङ्कुर्वन्ति। सुरेखा दूरभाषमाध्यमेन मित्राणि कथयति- अद्य मम जन्मदिनम् अस्ति। सायं सप्तवादने अवश्यम् आगच्छन्तु इति।*

*सायं-काले सर्वे जनाः एकत्रिताः भवन्ति। सर्वे करताडनं कुर्वन्ति। "जन्मदिवसस्य शुभाशयाः" इति वदन्ति। सर्वे जनाः सुरेखायै उपहारं यच्छन्ति। सुरेखा सर्वान्*

धन्यवादं कथयति। सा सर्वेभ्यः मिष्टान्नं ददाति।

सर्वे सुरेखायाः जन्मदिने मिष्टान्नानि व्यन्जनानि खादन्ति। सुरेखायै पुनः-पुनः शुभकामनां दत्वा सर्वे स्वगृहं गच्छन्ति।

## शब्दार्थाः

अद्य - आज, नूतनवस्त्राणि - नये कपड़े, अलङ्कुर्वन्ति - सजाते हैं, मम - मेरा, सप्तवादने - सात बजे, करताडनम् - ताली बजाना, तान् - उन सब को उपहारम् - उपहार (गिफ्ट)।

## अभ्यासाः

1. उच्चारणं कुरुत अभ्यासपुस्तिकायां च लिखत -

करोति कुरुतः कुर्वन्ति

वदति वदतः वदन्ति

उत्तिष्ठ उत्तिष्ठः उत्तिष्ठन्ति

अलङ्करोति अलङ्.कुरुतः अलङ्कुर्वन्ति

2. एकपदेन उत्तरत

यथा- सुरेखा कानि धरति ? नूतनानि वस्त्राणि।

(क) कस्याः जन्मदिनम् अस्ति ? ............................।

(ख) करताडनं के कुर्वन्ति ? ............................।

(ग) सर्वे जनाः सुरेखायै किं यच्छन्ति ? ............।

3. उदारणानुसारं लिखत

यथा- गच्छति -गच्छतु

(क) पठति ...............................

(ख) आगच्छति ..............................

(ग) गायति .................................

(घ) खेलति ...........................

यथा -गच्छतु- गच्छन्तु

(क) पठतु ...............................

(ख) गायतु ..............................

(ग) पिबतु .................................

(घ) नृत्यतु ...........................

**शिक्षण-संकेतः**

***शिक्षकः जन्मदिनकार्यक्रमविषये छात्रैः सह चर्चां कुर्यात्।***

# एकादशः पाठः

# चटका

एकस्मिन् दिवसे सौम्या स्व गृहप्राप्रणे उपविशति। पुस्तकं पठति। तदानीमेव एका चटका प्राप्रणस्य अन्तः आगच्छति। सा चटका गवाक्षस्य उपरि उपविशति।एकदा सा चटका शुष्कानि तृणानि आनयति। नीडं रचयति।सर्वं सौम्या प्रतिदिनं पश्यति। सा लघुपात्रे जलं स्थापयति। धान्यानि स्थापयति। चटका जलं पिबति। धान्यानि खादति। अण्डानि रक्षति।

एकदा एकः काकः अण्डानि

खादितुं तत्र आगच्छति।

*सौम्या काकं पश्यति। सा शीघ्रम्जालम् आनयति।*

*नीडस्य उपरि जालं स्थापयति। अण्डानि रक्षति। एतद् दृष्ट्वा चटका प्रसन्ना भवति। चटका सौम्यायाः समीपम् आगत्य चिवँ-चिवँ-चिवँ वदति। सौम्या प्रसन्ना भवति।*

## शब्दार्थाः

*गृहप्राप्रणे - घर के आँगन में, उपविशति-बैठती है, तदानीमेव-उसीसमय , गवाक्षस्य-खिड़की के, उपरि-ऊपर, शुष्कानितृणानि-सूखे घास-फूस को, एकदा-एक बार, नीडम्-घोसला, मनसि-मन में, धान्यानि-अन्न आदि को, खादितुम्-खाने के लिए।*

## अभ्यासाः

**1.** ***एकपदेन उत्तरत -***

*यथा- सौम्या कुत्र उपविशति ? गृहप्राप्रणे ।*

(*क*) *का जलं पिबति* ? ..................।

(*ख*) *चटका किं रचयति* ? .................।

(ग) *सौम्या शीघ्रं किम् आनयति* ? ..................।

**2. *चटका किं किं करोति, उदाहरणानुसारं लिखत-***

***तृणानि*, *जलम्*, *नीडम्***

***धान्यानि*, *अण्डानि*,**

***यथा* - *चटका तृणानि आनयति*।**

**3. *वाक्यानि पूरयत* -**

***यथा*- *चटका नीडं रचयति*।**

(क) ***सौम्या*** .............................. ***स्थापयति***।

(ख) ***चटका*** ............................... ***आनयति***।

(ग) ***सौम्या*** ................................ ***रक्षति***।

(घ) ***सौम्या*** ....................................***भवति***।

***रचयति*, *खादति*, *रक्षति*, *पिबति*, *आनयति***

***शिक्षण-संकेतः***

***शिक्षकः छात्रैः सह चटका-संरक्षण-विषये चर्चां कुर्यात्।***

## द्वादशः पाठ

# सिद्धार्थः

अस्माकं देशे बहवः महापुरुषाः अभवन् तेषु महापुरुषेषु गौतम बुद्धः प्रमुखः अस्ति बाल्यकाले अस्य नाम सिद्धार्थः आसीत्  सः बाल्यकालाद एव अति दयालुः आसीत् तस्य मनः क्रीडायाम् आखेट च न अरमत एकदा सिद्धार्थः  भ्रमणाय  नगरात् बहिः अगच्छत  तत्र सः क्रमेण एकं वृद्धम एकं मृतं, एकं रोगार्तम ,एकं संयासिनं पुरुषं च अपश्यत एतान् दृष्ट्वा तस्य मनसि वैराग्यम् अजायत्

सः स्वधर्म पत्नीम् अबोधम् सुतम् राहुलम राज्यं च त्यक्त्वा गृहाद निर्गच्छत सः कठिनं तपः अकरोत तपसः प्रभावात सः बुद्धः अभवत अहिंसा पालनं तस्य प्रमुखः शिक्षा आसीत् जनानां कल्याणाय सः बौद्ध धर्मस्य प्रचारम अकरोत

## शब्दार्थः

बहवः -बहुत से, अभवन् -हुए ,अरमत -लगता था  रोगार्तम -रोगी को

एक पदेन उत्तरत

*यथा -बाल्यकाले गौतम बुद्धस्य किम् नाम आसीत्* ? *सिद्धार्थः*

*क-सिद्धार्थः भ्रमणाय कुत्र अगच्छत* ?

*ख -कस्य प्रभावात् सः बुद्धः अभवत* ?

***वाक्यानि पूरयत -***

*क -सः बाल्य कालाद् एव अति ---------आसीत्*

*ख -सः कठिनम् -----------अकरोत्*

***शिक्षण संकेत***

*-शिक्षकः अन्य महा पुरुषाणाम विषये छात्रै सह चर्चा कुर्यात*

## त्रयोदशः पाठः

# विज्ञान-युगम ,

पश्य! इदं विज्ञानस्य युगम् अस्ति। अस्मिन् युगे वयं सर्वत्र (स्वगृहे, राजपथे, कार्यालये, विद्यालये) विज्ञानस्य चमत्कारान् पश्यामः।

विद्युत्प्रवाहेण उत्पन्नः प्रकाशः गृहाणि प्रकाशयति। यन्त्राणि चालयति। विद्युद्व्यजनेन वयं वायोः सुखम् अनुभवामः।

दूरभाष-सचलदूरभाष माध्यमेन वयं देशे विदेशे वार्तां कर्तुं समर्थाः स्मः। आकाशवाण्या देशस्य विदेशस्य च समाचारान् शृणुमः। दूरदर्शनं नानाप्रकारकं ज्ञानं ददाति, मनोरञ्जनं च करोति।

अद्य वायुयानेन मैट्रोरेलयानेन च वयं दूरात्-दूरं गन्तुं शक्नुमः। सप्रणक-अन्तर्जालमाध्यमेन अनेकानि कार्याणि सम्पन्नानि भवन्ति। अस्माकं भोजनम् अपि रसोइगैस-माध्यमेन शीघ्रमेव निर्मितं भवति। सर्वत्र विज्ञानस्य चमत्काराः अवलोक्यन्ते।

## शब्दार्थाः-

*विद्युद्व्यजनेन-बिजली के पंखे से, सचलदूरभाषः- मोबाइल, दूरदर्शनम्-टेलीविजन, वायुयानम्-हवाई जहाज, सप्रणकः-कम्प्यूटर, अन्तरिक्षे-अन्तरिक्ष में, अन्तर्जालमाध्यमेन- इण्टरनेट द्वारा।*

## *अभ्यासाः*

### 1. *एकपदेन उत्तरत्-*

(*क*) *वर्तमान युगं कस्य युगम् अस्ति* ?

(*ख*) *कः सर्वेषां गृहाणि प्रकाशयति* ?

(*ग*) *दूरदर्शनं किं करोति* ?

**2.** *वाक्यानि पूरयत-*

(*क*) *विद्युत्प्रवाहेण उत्पन्नः प्रकाशः सर्वेषां गृहाणि*........................................ ।

(*ख*) .................................................. *देशस्य विदेशस्य च समाचारान् श्रृणुमः।*

(*ग*) *दूरदर्शनं नानाप्रकारकं* ................................................................. *ददाति।*

(*घ*) *सप्रणक-अन्तर्जालमाध्यमेन अनेकानि* ................... *सम्पन्नानि भवन्ति।*

**3.** *चित्रं दृष्टवा नामानि लिखत-*

............................................

***शिक्षण-संकेतः***

***शिक्षकः छात्रैः सह विज्ञानस्य उपादेयता विषये चर्चां कुर्यात्।***

**चतुर्दशः पाठ**

## सुभाषितानि

*अलसस्य कुतो विद्या, अविद्यस्य कुतो धनम्।*

*अधनस्य कुतो मित्रम्, अमित्रस्य कुतः सुखम्।* 1।

*न चैरहार्यं न च राजहार्यं न भ्रातृभाज्यं न च भारकारि।*

*व्यये कृते वर्धत एव नित्यं विद्याधनं सर्वधनप्रधानम्।* 2।

*शैले शैले न माणिक्यम्, मौक्तिकं न गजे गजे।*

*साधवः नहि सर्वत्र, चन्दनं न वने वने।* 3।

*उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः।*

*न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः।* 4।

*नमन्ति फलिनो वृक्षाः नमन्ति गुणिनो जनाः।*

*शुष्कवृक्षाश्च मूर्खाश्च न नमन्ति कदाचन।* 5।

**शब्दार्थाः**

*न चैरहार्यम्-चोर के द्वारा चुराने योग्य नहीं हैं, भारकारि-भारयुक्त, कुतः-कहाँ,*

*माणिक्यम्-मणि, मौक्तिकम्-मोती, साधवः-अच्छे लोग, उद्यमेन - परिश्रम के द्वारा, न मनोरथैः- मन की इच्छा मात्र से नहीं, सुप्तस्य सिंहस्यः-सोते हुए सिंह के, प्रविशन्ति-प्रवेश करते हैं। नमन्ति-नमन करते हैं , शुष्कवृक्षाश्च-और सूखे वृक्ष, कदाचन-कभी।*

**शिक्षण-संकेतः**

*शिक्षकः यति-गति-लयपूर्वकं श्लोकानाम् उच्चारणं कारयेत्*

**अभ्यासाः**

**1. *एकपदेन उत्तरत-***

(क) ***अलसस्य किं नास्ति*** ?

(ख) ***शैले शैले किं न भवति*** ?

(ग) ***कस्य मुखे मृगाः न प्रविशन्ति*** ?

(घ) ***कीदृशाः वृक्षाः नमन्ति*** ?

**2. *वाक्यानि पूरयत-***

(क) ***अविद्यस्य कुतो*** ...................................... ।

(ख) ***नमन्ति*** ........................................... ***वृक्षाः***।

(ग) ***साधवः नहि*** ........................................... ।

(घ) ***विद्याधनं सर्वधनं*** ....................................... ।

**3. *श्लोकांशान् योजयत -***

(क) ***अधनस्य कुतो मित्रम् - प्रविशन्ति मुखे मृगाः***।

(ख) *शैले शैले न माणिक्यम् - नमन्ति गुणिनो जनाः।*

(ग) *न हि सुप्तस्य सिंहस्य - मौक्तिकं न गजे गजे।*

(घ) *नमन्ति फलिनो वृक्षाः - अमित्रस्य कुतो सुखम्।*

***शिक्षण-संकेतः***

***शिक्षकः यति-गति-लयपूर्वकं श्लोकानाम् उच्चारणं कारयेत् ।***

2. "*ज्ञः*" *इति योजयित्वा पदानि रचयत*

## पञ्चदशः पाठः

# महामनामदनमोहनमालवीयः

*महामना मदन मोहन मालवीयस्य जन्म प्रयाग नगरे अभवत . तस्य पिता श्री ब्रजनाथ मालवीयः आसीत् .श्रीमती मोनादेवी तस्य माता आसीत् .शैशवे सः संस्कृतं अपठ्यत.महान देश भक्तः असीत `उच्च शिक्षायाम प्राप्य सः राजकीय विद्यालये शिक्षकः अभवत .ततः शिक्षक पदम् त्यक्त्वा सः अधिवक्ता अभवत .अयं महापुरुषः शिक्षाविद राजनीतिज्ञः भारतीय संस्कृति संरक्षकः च आसीत् .*

*सः वाराणस्याम् काशीहिन्दुविश्वविद्यालयस्य स्थापनाम अकरोत .भारतस्य सर्वोच्च् -सम्मानेन भारत रत्नेन सः सम्मानितः*

## शब्दार्थः

*शैशवे -बाल्यावस्था में ,प्राप्य -प्राप्त करके ,त्यक्त्वा -छोड़कर ,अधिवक्ता -वकील ,भारत रत्नेन -भारत रत्न से ,सम्मानितः -सम्मानित किये गये*

## अभ्यासः

1-*मदन मोहन मालवीयस्य जन्म कुत्र अभवत* ?

2-*तस्य पिता कः आसीत्* ?

3-*सः कुत्र शिक्षकः अभवत* ?

4-सः केन सम्मानितः ?

"ज्ञः" इति योजयित्वा पदानि रचयत-

यथा- राजनीति - राजनीतिज्ञः

संस्कृत - ........................

सर्व - ........................

विशेष - ........................

दैव - ........................

कृत - ........................

3. उदाहरणानुसारं परिवर्तयत-

यथा- भवति - अभवत्

पठति - ...............

क्रीडति - ...............

चलति - ...............

शिक्षयति - ...............

4. प्रश्ननिर्माणं कुरुत-

यथा- तस्य जन्म प्रयागनगरे अभवत्। (कस्य/कुत्र/कः)

तस्य जन्म कुत्र अभवत्।

(*क*) ***मालवीयः देशभक्तः आसीत्।*** (*कः/ किम् / का*)

........................................................................... ?

(*ख*) ***श्रीमती मोनादेवी माता आसीत्।*** (*कदा / कस्य /कस्याः*)

.............................................................................?

(*ग*) ***सः भारतरत्नेन सम्मानितः*** (*कस्मै/ केन / काभ्याम्*)

.............................................................................?

***शिक्षण-संकेतः***

***- शिक्षकः मालवीय महोदयस्य जीवन विषये चर्चां कुर्यात्।***

## षोडशः पाठः

# काकस्य उद्यमः

*एकस्मिन् वने एकः काकः आसीत्। एकदा सः पिपासया आकुलः अभवत्। सः जलाशयम् अन्वेष्टुं वने इतस्ततः अभ्रमत्, किन्तु सुदूरं यावत् कुत्रापि कमपि जलाशयं न अपश्यत्। अन्ते सः एकं घटम् अलभत्। तस्मिन् घटे स्वल्पं जलम् आसीत्। अतः सः जलं पातुम् असमर्थः अभवत्। अथ सः एकम् उपायम् अचिन्तयत्। सः दूरात् पाषाण-खण्डानि आनीय घटे अक्षिपत् एवं क्रमेण जलम् उपरि समागच्छत्। काकः जलं पीत्वा सुखी अभवत्। उद्यमस्य प्रभावेण काकः सफलः अभवत्। उद्यमस्य प्रभावेण एव सर्वे जीवने सफलाः भवन्ति। उक्तं च-"उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः"।*

## शब्दार्थाः

*पिपासया-प्यास से, अन्वेष्टुम् - खोजने के लिए, इतस्ततः- इधर-उधर,*

*-पाषाणखण्डानि- पत्थर के टुकड़ों को, आनीय- लाकर, सिध्यन्ति-सफल हो जाते हैं।*

## अभ्यासाः

1. *प्रश्नानाम् उत्तराणि लिखत -*

*(क) काकः कुत्र आसीत्? (ख) सः कया आकुलः अभवत्?*

*(ग) सः किं कर्तुम् असमर्थः अभवत्? (घ) कार्याणि केन सिध्यन्ति ?*

**2. *वाक्यानि पूरयत -***

*क. एकदा सः पिपासया -----अभवत्।*

*ख. अन्ते सः एकं घटम् ------।*

*ग. घटे स्वल्पं----------- आसीत्।*

*घ. उद्यमस्य प्रभावेण एव सर्वे जीवने ------------ भवन्ति।*

**3. *क्रियापदानि परिवर्तयत -***

*यथा- भ्रमति - अभ्रमत्। चिन्तयति - ........................।*

*क्षिपति - .............। भवति - ........................।*

**4. *चित्रं दृष्ट्वा वाक्यानि पूरयत -***

*छायां, जीवनम्, वृक्षः, परोपकाराय, जनेभ्यः*

*(क) यथा- अहम् वृक्षः अस्मि।*

(ख) *अहं* ...................................... *फलानि यच्छामि*।

(ग) *अहं पथिकेभ्यः* .................................. *यच्छामि*।

(घ) *मम* ......................... *एव* ...................... *भवति*।

***शिक्षण-संकेतः -***

***<u>शिक्षकः सचलदूरभाषमाध्यमेन कथां श्रावयेत्।</u>***

सप्तदशः पाठः

# ईदमहोत्सवः

*(रहीमः करीमः, रेशमा च चन्द्रं दृष्टुम् इच्छन्ति)*

*रेशमा - भ्रातरौ! ईद महोत्सवः कदा भविष्यति ?*

*करीमः - अद्य चन्द्रस्य दर्शनम् अभवत्। श्वः एव ईदस्य महोत्सवः भविष्यति।*

*रहीमः - सखे इमं निर्णयम् कः अकरोत् ?*

*करीमः - मित्र! इमं निर्णयं दिल्लीतः इमाम महोदयः अकरोत्। रात्रौ एव तस्य उद्घोषः अभवत्।*

*रहीमः - श्वः वयं प्रातः एव 'ईदगाहम्' चलिष्यामः।*

*करीमः - वयं तत्र गमनाय नूतनवस्त्राणि एव धारयिष्यामः।*

*रहीमः - त्वां श्वः मम गृहम् आगच्छतम्। वयम् इतः 'ईदगाहम्' चलिष्यामः।*

रेशमा - भ्रातरौ! इतः पश्यताम्। अस्मिन् उत्सवे सम्मेलितुं हिन्दु -सिक्ख-ईसाई-

धर्मावलम्बिनः जनाः अपि सोत्साहम् आगच्छन्ति। तेषां स्वागतम् अस्माकं परमो धर्मः।

**शब्दार्थाः**

द्रष्टुम् - देखने के लिए, कदा-कब, श्वः-कल (आने वाला), इमं निर्णयम्-इस निर्णय को, उद्घोषः-घोषणा, आगच्छतम्-तुम दोनों आओ, सम्मेलितुम्-भाग लेने के लिए, सोत्साहम् -उत्साह के साथ।

**1.** एकपदेन उत्तरत

(क) कस्य दर्शनम् अभवत् ?

(ख) ईद महोत्सवः कदा भविष्यति ?

(ग) अस्य निर्णयं कः अकरोत् ?

(घ) तत्र गमनाय कानि वस्त्राणि धारयिष्यामः ?

**2.** उदाहरणानुसारं पदानि रचयत

यथा-

पठति पठिष्यति

भवति .................

खादति .................

चलति .................

*हसति* .................

3. *वाक्यानि पूरयत-*

(*क*) *अद्य चन्द्रस्य दर्शनम्* ...............................................।

(*ख*) *अस्य निर्णयं दिल्लीतः* .................................*अकरोत्*।

(*ग*) *त्वां श्वः मम एव गृहम्* ...............................................।

(*घ*) *रात्रौ एव तस्य* ..................................................*अभवत्*।

4. *अव्यय-पदानि मेलयत-*

*कदा भी*

*अद्य कल*

*एव कब*

*श्वः आज*

*तत्र ही*

*अपि वहाँ*

***शिक्षण-संकेतः***

*शिक्षकः अन्य पर्वणां विषये छात्रैः सह चर्चां कुर्यात्।*

अष्टादशः पाठः

# अहिंसा परमो धर्मः

सिंहासने स्थितः वनराजः आज्ञापयति श्रृगालम्।

मन्त्रिन्! पशुं-पशुं गत्वा त्वं मम काननं विशालम्।

आमन्त्रय भल्लूकमुलूकं गजं चित्रकं नागम्,।

मार्जारं नकुलं च शूकरं मकरं च सानुरागम्।

वर्षाकाले इदं काननं हरिततृणैः परिपूर्णम्।

तेजस्वी व्याघ्रः आगच्छतु वैरं कृत्वा चूर्णम्।

गायतु मल्हारं मण्डूकः नृत्यतु सदा मयूरः।

वने भवन्तु निर्भयाः सर्वे अधुना न कोऽपि क्रूरः।

*अहो अहिंसा परमो धर्मः कथं न चेतसि ज्ञातः।*

*अद्य भविष्यति निखिले विश्वे मार्गोऽयं विख्यातः।*

## *शब्दार्थाः*

*वनराजः-सिंह (वन का राजा), आज्ञापयति-आज्ञा देता है। शृगालम्-सियार को, मन्त्रिन्- हे मन्त्री, आमन्त्रय- निमन्त्रण दो; चित्रकम्-चीते को। मार्जारम्- बिलार को, नकुलम् - नेवले को। शूकरम्- सुअर को। काननम्-जंगल, हरिततृणैः- हरी-भरी घास से, मल्हारम्- वर्षाकालीन एक राग। क्रूरः-कठोर (निर्दय)। चेतसि- मन में। ज्ञातः- विदित, निखिले विश्वे-सम्पूर्ण संसार में।*

## *शिक्षण-संकेतः*

*शिक्षकः कवितायाः सस्वरवाचनं कारयेत्।*

**एकोनविंशतिः:पाठः**

# चन्द्रशेखरआजादः

चन्द्रशेखरआजादः महान् राष्ट्रभक्तः आसीत्। अस्य जन्म मध्यप्रदेशस्य भावराग्रामे (वर्तमाने चन्द्रशेखर- आजादनगरे) अभवत्। तस्य पिता श्री सीतारामः माता च श्रीमती जगरानी देवी आस्ताम्। आचार्यनरेन्द्रदेवः काशीविद्यापीठे तस्य अध्ययनव्यवस्थाम् अकरोत्। विद्यापीठस्य छात्रैः सह असहयोगान्दोलने सम्मेलितः अभवत्। सः त्रिवर्णं ध्वजं नीत्वा 'जयतु महात्मा गान्धी' 'जयतु भारतमाता' इति घोषयन् न्यायाधीशस्य सम्मुखे उपस्थितः अभवत्। न्यायाधीशः तम् अपृच्छत् तव नाम किम् ? सः उत्तरं दत्तवान्-मम नाम 'आजादः इति। क्रुद्धः न्यायाधीशः तस्मै पञ्च चदशकशाघातदण्डं दत्तवान। भारतमातुः जयकारं कुर्वन् ब्रिटिशसाम्राज्यस्य विनाशाय दृढ़प्रतिज्ञाम् अकरोत्। आजादः प्रयागस्य अल्फ्रेडपार्कनाम्नि उद्याने आंग्लरक्षिभिः परिवृतः। आरक्षकाणां गुलिकावृष्टिं दृष्टवा सः अपि गुलिकाप्रहारम् आरभत्। यदा तस्य पार्श्वे एका गुलिका अवशिष्टा तदा सः आत्मानम् एव हतवान्। एवं सः आजीवनम् आजादः आसीत्। देशस्य स्वतन्त्रतायै मृतः अपि सः अमरः अभवत्।

## शब्दार्थाः

तस्मात्-उनसे, त्रिवर्णं ध्वजम्-तिरंगे ध्वज को, घोषयन्- चिल्लाते हुए, पञ्चदशकशाघातदण्डम्- 15 कोड़े मारने का दण्ड, दत्तवान्-दिया, आंग्लरक्षिभिः- अंग्रेज सैनिकों के द्वारा, गुलिकावृष्टिम्-गोलियों की वर्षा को आत्मानम् - स्वयं को, सम्मेलितः - भाग लिया।

## अभ्यासाः

**1.** एकपदेन उत्तरत-

(क) महान् राष्ट्रभक्तः कः आसीत् ?

(ख) सः कस्मिन् आन्दोलने सम्मिलितः अभवत् ?

(ग) आजादस्य मातुः नाम किम् आसीत्

(घ) सः कस्य विनाशाय दृढ़प्रतिज्ञाम् अकरोत् ?

(ड.) चन्द्रशेखर आजादः उद्याने कैः परिवृतः ?

**2.** सत्यकथनानां समक्षम् 'आम्' असत्यकथनानां समक्षं 'न' इति लिखत-

(क) चन्द्रशेखरस्य जन्म बिहार प्रदेशे अभवत्। ( )

(ख) आजादः ब्रिटिशसाम्राज्यस्य विनाशाय दृढ़प्रतिज्ञाम् अकरोत्। ( )

(ग) आंग्ल-आरक्षकः चन्द्रशेखरं हतवान्। ( )

(घ) सः असहयोगान्दोलने सम्मिलितः अभवत्। ( )

**3.** उदाहरणानुसारं परिवर्तयत-

यथा- ग्रामः - ग्रामे नगरम् - नगरे

विद्यालयः - .............. उद्यानम् - ..............

प्रदेशः - .............. जीवनम् - ..............

देशः - .............. विद्यापीठम् - ..............

वृक्षः - .............. गृहम् - ..............

कार्यालयः - .............. पुस्तकम् - ..............

**4. वाक्यानि पूरयत -**

(क) चन्द्रशेखरस्य जन्म मध्यप्रदेशस्य ............................ग्रामे अभवत् ।

(ख) आजादस्य पितुः नाम ....................................................... आसीत्।

(ग) विद्यापीठस्य छात्रैः सह ................................. सम्मिलितः अभवत्।

(घ) देशस्य स्वतन्त्रतायै मृतः अपि सः .................................... अभवत्।

**शिक्षणसंकेतः**

- शिक्षकः चन्द्रशेखरआजादस्य विषये चर्चां कुर्यात् ।

*विंशतिः पाठ*

*एकदा दश बालकाः स्नानाय नदी तटम गताः । ते स्नात्वा नद्याः बहिः आगताः। तत्र तेषाम नायकः अकथयत –वयम सर्वे स्मः न वा ?इति कथ यित्वा सः एकः द्व त्रयः एकं द्व, त्रयः चत्वारः , प॰च षट्, सप्त अष्ट, नवइति क्रमेण सर्वान अगणयत ।*

*सः अवदत् अत्र तु नव बालकाः एव सन्ति ।एकः बालकः न अस्ति ।क्रमशः सर्वे अपि बालकानाम गणनाम अकुर्वन .तेषाम् गणनायां नव बालकाः एव आसन इति मत्वा ते सर्वे दुखिताः अभवन ।तदा कश्चित् पथिकः तत्र आगच्छत ।.सः तान बालकान अपृच्छत युष्माकम दुःखस्य किम् कारणम् अस्ति । बालकः अकथयत .वयम दश बालकाः स्नानाय आगताः । इदानीं नव बालकाः एव स्मः ।.एकः कुत्र गतः?*

*पथिकः तान बालकान अगणयत । ततः सः नायकं अकथयत –त्वं गणनां न कृतवान् ।दशमः बालकः त्वं असि इति ज्ञात्वा सर्वे प्रसन्नाः अभवन । नव*

*अभ्यासाः*

1. *साभिनयं गीतं गायत अभ्यासपुस्तिकायां च लिखत -*

*एकं द्वे, वदन्तु सर्वे*

*त्रीणि चत्वारि, आनय वारि*

*पञ्च , षट्, कराभ्यां फट*

सप्त ,अष्ट, संस्कृतनिष्ठ

नव ,दश, भाषा-प्रवेश।

2. संख्यापदानि उचित -अंके सह योजयत -

| | |
|---|---|
| षट् | 3 |
| अष्ट | 7 |
| प॰च | 6 |
| त्रयः | 10 |
| द्वौ | 8 |
| सप्त | 2 |
| दश | 5 |

3. उचितसंख्यापदैः वाक्यानि पूरयत -

(क) सप्ताहे .................. दिनानि भवन्ति।

(ख) मम ............................. हस्तौ स्तः।

(ग) गजस्य .................. पादाः भवन्ति।

घ) ईश्वरः ................................ अस्ति।

4. गणनां कृत्वा संख्यापदं लिखत -

.................कन्दुकानि।

..................***पुस्तकानि***।

..................***कारयानानि***।

................***क्रीडनकानि***।

***शिक्षण-संकेतः***

***शिक्षकः संख्यापदानां प्रयोगं कारयेत् ।***

## सन्धि

सन्धि का साधारण अर्थ है 'मेल'। किन्हीं दो वर्णों के निकट आने से जो विकार उत्पन्न होता है उसे सन्धि कहते हैं। जैसे- पुस्तक$आलयः = पुस्तकालयः।

### दीर्घ सन्धि-

अ, आ, इ, ई, उ, ऊ, ऋ, के बाद यदि यही स्वर आये तो दीर्घ सन्धि होती है।

अ, आ, +अ आ = आ

यथा- बाल्य + अवस्था= बाल्यावस्था

विद्या + आलयः= विद्यालयः

इ, ई +इ, ई = ई मुनि + इच्छा = मुनीच्छा

नदी + ईशः = नदीशः

उ, ऊ + उ, ऊ = ऊ भानु + उदयः = भानूदयः

वधू +उत्सवः=वधूत्सवः

## पुरुष और वचन

**पुरुष**- प्रत्येक लकार में तीन पुरुष और तीन वचन होते हैं।

1. **प्रथम पुरुष**- इसके रूपों का प्रयोग सः-वह, तौ- वे दोनों, ते- वे सब तथा संज्ञा एवं सर्वनाम पदों के साथ होता है।

2. **मध्यम पुरुष**- इसके रूपों का प्रयोग त्वम्- तुम, युवाम्- तुम दोनों, तथा यूयम्- तुम सब के साथ होता है।

3. **उत्तम पुरुष**- इसके रूपों का प्रयोग अहम्-मैं, आवाम्- हम दोनों तथा वयम्- हम सब के साथ होता है।

**वचन**- पुरुष की तरह वचन भी तीन होते हैं-

**एकवचन**- प्रथम, मध्यम तथा उत्तम पुरुष के एक वचन का प्रयोग एक वचन के कर्ता के साथ होता है। इसमें एक संख्या का बोध होता है।

**द्विवचन**- इसमें दो संख्याओं का बोध होता है। प्रथम, मध्यम तथा उत्तम पुरुष के द्विवचन का प्रयोग द्विवचन के कर्ता के साथ होता है।

**बहुवचन**- इसमें तीन या उससे अधिक संख्याओं का बोध होता है। प्रथम, मध्यम तथा उत्तम पुरुष के बहुवचन का प्रयोग बहुवचन के कर्ता के साथ होता है।

**अव्यय**- जिन शब्दों के लिंग, वचन, विभक्ति में कभी भी कोई परिवर्तन नहीं होता हैं, वे अव्यय कहे जाते हैं। कुछ उपयोगी अव्यय निम्नलिखित हैं-

सर्वत्र - सब जगह कुत्र - कहाँ किम् - क्या

एकदा - एक बार एव - ही कदा - कब

*अन्यत्र - दूसरी जगह यदा - जब प्रातः - सुबह*

*सदा - हमेशा मन्दम् - धीरे से तत्र - वहाँ*

*अधुना - अब सह - साथ सायम् - शाम*

*श्वः - कल (आने वाला) तथापि- फिर भी शनैः-शनैः - धीरे-धीरे*

# संख्याएँ

| | | | |
|---|---|---|---|
| 1 | एकः | एका | एकम् |
| 2 | द्वौ | द्वे | द्वे |
| 3 | त्रयः | तिस्रः | त्रीणि |
| 4 | चत्वारः | चतस्रः | चत्वारि |
| 5 | पञ्च | पञ्च | पञ्च |
| 6. | षट् | षट् | षट् |
| 7. | सप्त | सप्त | सप्त |
| 8. | अष्ट | अष्ट | अष्ट |
| 9. | नव | नव | नव |
| 10. | दश | दश | दश |

## *विभक्ति (कारक)-चिह्न*

*विभक्तिः* *कारक* *चिह्न*

*प्रथमा कर्ता ने*

*द्वितीया कर्म को*

*तृतीया करण से, (के द्वारा)*

*चतुर्थी सम्प्रदान के लिए*

*पञ्चमी अपादान से,(अलग होने के अर्थ में)*

*षष्ठी सम्बन्ध का, की, के,*

*सप्तमी अधिकरण में, पर, ऊपर*

*सम्बोधन सम्बोधन हे! अरे! भो*

# शब्दरूपाणि

(अकारान्त पुल्लिंग )

*विभक्तिः एकवचनम् द्विवचनम् बहुवचनम्*

प्रथमा रामः रामौ रामाः

द्वितीया रामम् रामौ रामान्

तृतीया रामेण रामाभ्याम् रामैः

चतुर्थी रामाय रामाभ्याम् रामेभ्यः

पञ्चमी रामात् रामाभ्याम् रामेभ्यः

षष्ठी रामस्य रामयोः रामाणाम्

सप्तमी रामे रामयोः रामेषु

सम्बोधन हे राम! हे रामौ! हे रामाः!

*विशेषः*- एवमेव अश्व-सिंह- वानर इत्यादीनाम् अकारान्त पुल्लिंग शब्दानां रूपाणि भवन्ति।

## *रमा*

*(आकारान्त स्त्रीलिंग )*

*विभक्तिः एकवचनम् द्विवचनम् बहुवचनम*

*प्रथमा रमा रमे रमाः*

*द्वितीया रमाम् रमे रमाः*

*तृतीया रमया रमाभ्याम् रमाभिः*

*चतुर्थी रमायै रमाभ्याम् रमाभ्यः*

*पञ्चमी  रमायाः रमाभ्याम् रमाभ्यः*

*षष्ठी रमायाः रमयोः रमाणाम्*

*सप्तमी रमायाम् रमयोः रमासु*

*सम्बोधन हे रमे! हे रमे! हे रमाः!*

*विशेषः- एवमेव एडका-कन्या- कोकिला- मूषिका-अजाइत्यादीनाम् आकारान्त स्त्रीलिंग - शब्दानां रूपाणि भवन्ति।*

**पितृ-(पिता)**

***ऋकारान्त पुल्लिंग***

***विभक्तिः एकवचनम् द्विवचनम् बहुवचनम्***

***प्रथमा पिता पितरौ पितरः***

***द्वितीया पितरम् पितरौ पितन्***

***तृतीया पित्रा पितृभ्याम् पितृभिः***

***चतुर्थी पित्रे पितृभ्याम् पितृभ्यः***

***पञ्चमी पितुः पितृभ्याम् पितृभ्यः***

***षष्ठी पितुः पित्रोः पितणाम्***

***सप्तमी पितरि पित्रोः पितृषु***

***सम्बोधन हे पितः हे पितरौ हे पितरः***

**फल**

(*अकारान्त नपुंसकलिंग* )

*विभक्तिः एकवचनम् द्विवचनम् बहुवचनम्*

*प्रथमा फलम् फले फलानि*

*द्वितीया फलम् फले फलानि*

*तृतीया फलेन फलाभ्याम् फलैः*

*चतुर्थी फलाय फलाभ्याम् फलेभ्यः*

*पञ्चमी फलात् फलाभ्याम् फलेभ्यः*

*षष्ठी फलस्य फलयोः फलानाम्*

*सप्तमी फले फलयोः फलेषु*

*सम्बोधन हे फलम् हे फले हे फलानि*

*विशेषः- एवमेव पुस्तक-पत्र-पुष्प आदि नपुंसकलिंग रूपाणि भवन्ति।*

*विशेषः- भ्रातृ- भाई जामातृ-दामाद इत्यादि पुँलिप्रः ऋकारान्त शब्दानां रूपाणि भवन्ति।*

## सर्वनाम रूपाणि

### अस्मद् (मैं)

| विभक्तिः | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| प्रथमा | अहम् | आवाम् | वयम् |
| द्वितीया | माम् | आवाम् | अस्मान् |
| तृतीया | मया | आवाभ्याम् | अस्माभिः |
| चतुर्थी | मह्यम् | आवाभ्याम् | अस्मभ्यम् |
| पञ्चमी | मत् | आवाभ्याम् | अस्मत् |
| षष्ठी | मम | आवयोः | अस्माकम् |
| सप्तमी | मयि | आवयोः | अस्मासु |

## युष्मद् (तुम)

*विभक्तिः एकवचनम् द्विवचनम् बहुवचनम्*

*प्रथमा त्वम् युवाम् यूयम्*

*द्वितीया त्वाम् युवाम् युष्मान्*

*तृतीया त्वया युवाभ्याम् युष्माभिः*

*चतुर्थी तुभ्यं युवाभ्याम् युष्मभ्यम्*

*पञ्चमी त्वत् युवाभ्याम् युष्मत्*

*षष्ठी तव युवयोः युष्माकम्*

*सप्तमी त्वयि युवयोः युष्मासु*

## इदम्- (यह)

### पुल्लिंग

विभक्तिः एकवचनम् द्विवचनम् बहुवचनम्

प्रथमा इयम् इमे इमाः

द्वितीया इमाम् इमे इमाः

तृतीया अनया आभ्याम् आभिः

चतुर्थी अस्यै आभ्याम् आभ्यः

पञ्चमी  अस्याः आभ्याम् आभ्यः

षष्ठी अस्याः अनयोः आसाम्

सप्तमी अस्याम् अनयोः आसु

## इदम् (यह)

### स्त्रीलिंग

प्रथमा अयम् इमौ इमे

द्वितीया इमम् इमौ इमान्

तृतीया अनेन आभ्याम् एभिः

चतुर्थी अस्मै आभ्याम् एभ्यः

पञ्चमी अस्मात् आभ्याम् एभ्यः

षष्ठी अस्य अनयोः एषाम्

सप्तमी अस्मिन् अनयोः एषु

## किम् (कौन)

### नपुंसक लिंगः

प्रथमा इदम् इमे इमानि

द्वितीया इदम् इमे इमानि

तृतीया अनेन आभ्याम् एभिः

चतुर्थी अस्मै आभ्याम् एभ्यः

पञ्चमी  अस्मात् आभ्याम् एभ्यः

षष्ठी अस्य अनयोः एषाम्

सप्तमी अस्मिन् अनयोः एषु

## किम (कौन)

### पुल्लिंग

विभक्तिः एकवचनम् द्विवचनम् बहुवचनम्

प्रथमा कः कौ के

द्वितीया कम् कौ कान्

तृतीया केन काभ्याम् कैः

चतुर्थी कस्मै काभ्याम् केभ्यः

पञ्चमी कस्मात् काभ्याम् केभ्यः

षष्ठी कस्य कयोः केषाम्

सप्तमी कस्मिन् कयोः केषु

विशेष: शेषरूपाणि पुँल्लिप्रवत् भवन्ति।

## किम

### स्त्रीलिंग

प्रथमा का के काः

द्वितीया काम् के काः

तृतीया कया काभ्याम् काभिः

चतुर्थी कस्यै काभ्याम् काभ्यः

पञ्चमी  कस्याः काभ्याम् काभ्यः

षष्ठी कस्याः कयोः कासाम्

सप्तमी कस्याम् कयोः कासु

## किम्

### नपुंसकलिंग

विभक्तिः एकवचनम् द्विवचनम् बहुवचनम्

प्रथम किम् के कानि

द्वितीया किम् के कानि

तृतीया केन काभ्याम् कैः

चतुर्थी कस्मै काभ्याम् केभ्यः

पञ्चमी  कस्मात् काभ्याम् केभ्यः

षष्ठी कस्य कयोः केषाम्

सप्तमी कस्मिन् कयोः केषु

## धातु रूप

## कृ- करना

### लट् लकार (वर्तमान काल)

पुरुषः एकवचनम् द्विवचनम् बहुवचनम्

प्रथम पुरुषः करोति कुरुतः कुर्वन्ति

मध्यम पुरुषः करोषि कुरुथः कुरुथ

उत्तम पुरुषः करोमि कुर्वः कुर्मः

### लङ् लकार (भूतकाल)

पुरुषः एकवचनम् द्विवचनम् बहुवचनम्

प्रथम पुरुषः अकरोत् अकुरुताम् अकुर्वन्

मध्यम पुरुषः अकरोः अकुरुतम् अकुरुत

उत्तम पुरुषः अकरवम् अकुर्व अकुर्म

### लृट् लकार (भविष्यत् काल)

पुरुषः एकवचनम् द्विवचनम् बहुवचनम्

प्रथम पुरुषः करिष्यति करिष्यतः करिष्यन्ति

मध्यम पुरुषः करिष्यसि करिष्यथः करिष्यथ

उत्तम पुरुषः करिष्यामि करिष्यावः करिष्यामः

## लोट् लकार (आज्ञार्थक)

पुरुषः एकवचनम् द्विवचनम् बहुवचनम्

प्रथम पुरुषः करोतु कुरुताम् कुर्वन्तु

मध्यम पुरुषः कुरु कुरुतम् कुरुत

उत्तम पुरुषः करवाणि करवाव करवाम

## पठ्- पढ़ना

**लट् लकार (वर्तमान काल)**

पुरुषः एकवचनम् द्विवचनम् बहुवचनम्

प्रथम पुरुषः पठति पठतः पठन्ति

मध्यम पुरुषः पठसि पठथः पठथ

उत्तम पुरुषः पठामि पठावः पठामः

**लङ् लकार (भूतकाल)**

पुरुषः एकवचनम् द्विवचनम् बहुवचनम्

प्रथम पुरुषः अपठत् अपठताम् अपठन्

मध्यम पुरुषः अपठः अपठतम् अपठत

उत्तम पुरुषः अपठम् अपठाव अपठाम

**लृट् लकार (भविष्यत् काल)**

पुरुषः एकवचनम् द्विवचनम् बहुवचनम्

प्रथम पुरुषः पठिष्यति पठिष्यतः पठिष्यन्ति

मध्यम पुरुषः पठिष्यसि पठिष्यथः पठिष्यथ

उत्तम पुरुषः पठिष्यामि पठिष्यावः पठिष्यामः

**लोट् लकार (आज्ञार्थक)**

| पुरुषः | एकवचनम् | द्विवचनम् | बहुवचनम् |
| --- | --- | --- | --- |
| प्रथम पुरुषः | पठतु | पठताम् | पठन्तु |
| मध्यम पुरुषः | पठ | पठतम् | पठत |
| उत्तम पुरुषः | पठानि | पठाव | पठाम |

## गम् (गच्छ्)- जाना

### लट् लकार (वर्तमान काल)

पुरुषः एकवचनम् द्विवचनम् बहुवचनम्

प्रथम पुरुषः गच्छति गच्छतः गच्छन्ति

मध्यम पुरुषः गच्छसि गच्छथः गच्छथ

उत्तम पुरुषः गच्छामि गच्छावः गच्छामः

### लङ् लकार (भूतकाल)

पुरुषः एकवचनम् द्विवचनम् बहुवचनम्

प्रथम पुरुषः अगच्छत् अगच्छताम् अगच्छन्

मध्यम पुरुषः अगच्छः अगच्छतम् अगच्छत

उत्तम पुरुषः अगच्छम् अगच्छाव अगच्छाम

### लृट् लकार (भविष्यत् काल)

पुरुषः एकवचनम् द्विवचनम् बहुवचनम्

प्रथम पुरुषः गमिष्यति गमिष्यतः गमिष्यन्ति

मध्यम पुरुषः गमिष्यसि गमिष्यथः गमिष्यथ

उत्तम पुरुषः गमिष्यामि गमिष्यावः गमिष्यामः

### लोट् लकार (आज्ञार्थक)

| पुरुषः | एकवचनम् | द्विवचनम् | बहुवचनम् |
| --- | --- | --- | --- |
| प्रथम पुरुषः | गच्छतु | गच्छताम् | गच्छन्तु |
| मध्यम पुरुषः | गच्छ | गच्छतम् | गच्छत |
| उत्तम पुरुषः | गच्छानि | गच्छाव | गच्छाम |

*निर्देशन –*

- ***श्री संजय सिन्हा, निदेशक, राज्य शैक्षिक अनुसन्धान एवं प्रशिक्षण परिषद् ,उ.प्र.***
- ***श्री अजय कुमार सिंह ,संयुक्त निदेशक, राज्य शैक्षिक अनुसन्धान एवं प्रशिक्षण परिषद् ,उ.प्र.***

**e-book *विकास* ---**

- ***अल्पा निगम(प्र.अ.) ,प्राथमिक विद्यालय तिलौली, गोरखपुर***
- ***अमित शर्मा(स.अ),उच्च प्राथमिक विद्यालय महतवानी, उन्नाव***
- ***अनीता विश्वकर्मा(स.अ), प्राथमिक विद्यालय सैदपुर पीलीभीत***
- ***अनुभव यादव(स.अ), प्राथमिक विद्यालय गुलरिया उन्नाव***
- ***अनुपम चौधरी (स.अ),प्राथमिक विद्यालय नौरंगाबाद बदायूं***
- ***आशुतोष आनंद (स.अ),उच्च प्राथमिक विद्यालय मियाँगंज बाराबंकी***
- ***दीपक कुशवाहा (स.अ),उच्च प्राथमिक विद्यालय गजफ्फरनगर, उन्नाव***
- ***फिरोज खान (स.अ),प्राथमिक विद्यालय चिड़ावक, बुलंदशहर***
- ***गौरव सिंह (स.अ),उच्च प्राथमिक विद्यालय फतेहपुर मठिया, फतेहपुर***
- ***हृतिक वर्मा (स.अ),प्राथमिक विद्यालय संग्राम खेड़ा ,उन्नाव***
- ***नितिन कुमार पाण्डेय (स.अ),प्राथमिक विद्यालय मध्यनगर ,श्रावस्ती***
- ***मनीष प्रताप सिंह (स.अ),प्राथमिक विद्यालय प्रेम नगर, फतेहपुर***
- ***प्राणेश भूषण मिश्र (स.अ),पूर्व माध्यमिक विद्यालय पठा, ललितपुर***
- ***प्रशांत चौधरी (स.अ),प्राथमिक विद्यालय रवाना, बिजनौर***
- ***राजीव कुमार साहू (स.अ),उच्च प्राथमिक विद्यालय ,सराय गोकुल सुल्तानपुर***
- ***शशि कुमार(स.अ), प्राथमिक विद्यालय खेड़ा, लच्छीखेड़ा,अकोहरी उन्नाव***
- ***शिवाली गुप्ता (स.अ),पूर्व माध्यमिक विद्यालय धौलरी,मेरठ***
- ***वरुणेश मिश्रा (स.अ),प्राथमिक विद्यालय मदनपुर पनियार ,सुल्तानपुर***